तदा तत्कारणवैफल्यप्रसङ्गः, सदैव च घटस्य सत्त्वं भवेत्, अथ घटेनाभावो जन्यते तर्हि कथमहेतुकत्वमस्य ?, द्वितीयश्च क्षणोऽभावेन व्यवहितोत्पत्तिः स्यात्, अथ द्वितीयक्षण एव प्रथमस्याभावो नान्योऽभावोऽन्तराले कश्चित्, तर्हि कथमहेतुकत्वमस्य ?, अन्यथा द्वितीयक्षणस्याप्यहेतुकत्वप्रसङ्गात्। कुमारिलेनाप्युक्तम्–"भावान्तरविनिर्मुक्तो, भावोऽत्रानुपलम्भवत्। अभावः सम्मतस्तस्य, हेतोः किं न समुद्भवः ? ॥१॥" इति, अयं चास्मदुक्तन्यायेनैव साधीयान्, अतोऽनुगताकारस्य द्रव्यस्य कथमिव सम्भवः परैः शक्यप्रतिषेधः ?, अनुगताकारव्यतिरेकेण नाशस्वरूपस्यैवायोगादिति॥ विद्युदादिना व्यभिचाराशङ्कां परिहरति—

विद्युदाद्यपि नात्यन्तं, नाशित्वेन प्रकाशते। अन्धकाराद्युपादानभावेनास्यैव सम्भवात् ॥१३॥

विद्युदाद्यनन्तरमन्धकाराद्युपलभ्यते, न चोपादानमन्तरेण कार्यं संभवति, तच्च तदुपादानं यत्तेन रूपेण परिणमति, तद्रूपपरिणामि चात्र विद्युदाद्येव, न क्वचिदत्यन्तोच्छेदो नाशः।

अन्धकारभाववादः–आलोकाभावमात्रमेवान्धकारमिति कश्चित्, यदुक्तं–'द्रव्यगुणकर्मनिष्पत्तिवैधर्म्याद्भावाभावस्तम' इति, तदसत्, एवं हि कमपि रूपविशेषमुपलम्भमानस्य मध्येगृहमन्धकारमुपलभ्यत इत्यादिव्यवहाराभावप्रसङ्गः, किञ्च–अगृह्यमाणे प्रतियोगिनि प्रतिषेधमुखेनाभावो गृह्यते, न स्वतन्त्रः, अन्धकारे च गृह्यमाणे नान्यस्य ग्रहणमस्ति, न चायं प्रतिषेधमुखः प्रत्ययः, तन्नाभावोऽयं, न चालोकादर्शनमात्रमपीदं, बहिर्मुखतया तम इति कस्यचित्कृष्णाकारस्य संवेदनात्, तस्माद्रूपविशेष एवायं कश्चित् पुद्गलात्मकस्तथापरिणतस्तम इति प्रतीयते, न चैवं पुद्गलात्मकत्वे रूपवद्द्रव्यस्य स्पर्शाव्यभिचारात् स्पर्शवद्द्रव्यस्य च महतः प्रतिघातधर्मकत्वात् तमसि सञ्चरतः प्रतिबन्धः स्यादित्यादि दूषणं, यतो यथा कैश्चिदवयवैरदृष्टादिवशादनुद्भूतस्पर्शमनिविडावयवादिस्वरूपं प्रभामण्डलं